यस्मिन् देशे न संमानो न प्रीतिर् न च बान्धवाः ।
न च विद्याऽऽगमः कश्चिद् वासं तत्र न कारयेत् ॥ २६ ॥

आपत्-काले महाऽनर्थे दुर्भिक्षे शत्रु-विग्रहे ।
राज-द्वारे श्मशाने वा यस् तिष्ठति स बान्धवः ॥ २७ ॥

---

2.26 CRP 2.26, CRB 2.27, CRBh I 2.26, CRBh II 2.23, CRC 2.29, CRCa I 2.24, CRT 2.19, GP 1.109,20=CV 1.8, Cv 1.9, CN 35 where different readings are noted. Also CnT II 1.8, CnT III 1.8, CnT III CnT IV 8, CnT V 7, CPS 20.53. Also quoted in HI 1.109, HS 1.99, HM 1.103, HP 1.77, HN 1.79, HK 1.105, HH 22.11-2, HC 30.8-9, Śto 332.22-3, SRBh 155.88, SRK 224.30, IS 5352, Sskṛ 54. Also found in LN (P) 114, (cf. LN (P) 158), DhN (P) 79, NKy (B) 142. Also see SRN (T) 342.

*a* संमानं CRP, CRBh I, CRBh II, CRCa I, GP, GPy. *b* वृत्तिर [प्री°] CRT, CV, Cv, CN; बान्धवा CRBh I. *c* °गम CRBh I; गमोऽप्य् अस्ति CRC, CRT. *d* (°श्चित्) तं देशं परिवर्जयेत् CV, Cv, CN; GP, GPy; वासम् CRP; त° का° न tr. CRC, CRT.

Other readings have been recorded in CV 1.8, Cv 1 9 and CN 35.

2.27 CRP 2.27, CRB 2.28, CRBh I 2.27, CRBh II 2.24, CRC 2.17, CRCa I 2.25, CRT 2.20=CV 1.12, Cv 1.13, CS 1.84, CN 15 where different readings are noted. Also CnT II 2.3, CnT III 1.15, CnT VI 16, CPS 21.58. Also quoted in Pts 5.41, HJ 1.75, and 4.66, HS 1.67, HM 1.72 and 4.62, HP 4.66, HN 4.66, HK 1.74 and 4.67, HH 18.3-4, HC 24.12-3 and 149.3-4, VCbr 4.O.15 (*p.* 285 a) SRBh 88.5, SRHt 109.12, SuM 23.43, IS 1221, Subh 177, Sskṛ 54. Also found in LN (P) 92, DhN (P) 95, NKy (B) 121.

*a* आपत्काले CRBh I; आतुरे व्यसनप्राप्ते CRT; आतुरे व्यसने प्राप्ते CV, Cv, CS; उत्सवे व्यसने चैव CN. *b* शत्रुसङ्कटे CRC, CRT; शत्रु संकटे CV. *c* च [वा] CRC, CRT, CV, Cv, CN, CS. *d* यस्तिष्ठति CRBh I.

Other readings have been recorded in CV 1.12, Cv 1.13, CS 1.84 and CN 15.

धनस्य यस्याऽस्ति न राजतो वा
न चौरतो वाऽपि भयं कदाचित् ।
विद्याऽऽख्यम् अन्तर्धनम् अर्जयेत् तद्
अन्यद् धनं नश्वरम् एव सर्वम् ॥ २८ ॥

यद् अर्जितं प्राण-हरैः परिश्रमैर्
मृतस्य तत् संविभजन्ति रिक्थिनः ।
कृतं च यद् दुष्कृतम् अर्थ-लिप्सया
तद् एव दैवो(व-उ)पहतस्य यौतुकम् ॥ २९ ॥

---

2.28 CRP 2.28, CRB 2.33, CRBh I 2.28, (CRBh II 2.25, CRC 2.30, CRCa I 2.26, (cf. CRT 2.21, GP 1.109,21). Also CPS 37.33. (Cf. MBh 12.321,40, SV 2957).

*a* धनस्या CRBh II. *c* च [तद्] CRBh I. *d* यदन्या [अ°] CRBh I; नश्यति सर्वम् एव CRC, CPS.

In CRT and GP this maxim reads:

धनस्य यस्य राजतो भयं (राजभ्यो GP) नाऽस्ति न चौरतः (चौ° GP) ।
मृतं च यत्र मुञ्चति च समर्जयेत् च (°यस्य GP) तद् धनम् ॥

Upajati metre (Upendravajra and Indravajrā.)

2.29 CRP 2.29, CRB 2.34, CRBh I 2.29, CRBh II 2.26, CRC 2.31, CRCa I 2.27, CRT 2.22, GP 1.109,22. Also CPS 40.41. Also quoted in *SV 3099 (ascribed to Vyāsa).*

*a* पापकरैः CRB; °हरैः CRBh I; °श्रमैः (°मै GPy) GP, GPy. *b* तं (तद् GPy) वै विभ° GP, GPy; रिक्तनः CRBh I; रिक्थिनः CRCa I. *c* च om. CRBh I; च CRBh I, CRBh II; °लिप्सय CRBh I. *d* देवापहतस्य शासनम् CRT; दोषापहतस्य GP, GPy; °हत तु यानकम् CRBh I; °स्तस्य CRBh II; यौतकम् CRBh II.

Vaṁśastha metre.

संचितं क्रतुषु नो(न उ)पयुज्यते
याचितं गुणवते न दीयते ।
तत् कदर्थ-परिरक्षितं धनं
चौर-पार्थिव-गृहेषु भुज्यते ॥ ३० ॥

संचित निहितं भूमौ परामृष्टं मुहुर्-मुहुः ।
आखोर् इव कदर्यस्य धनं दुःखाय केवलम् ॥ ३१ ॥

न कल्पते या पर-लोक-सिद्धये
न कीर्तये नाऽपि सुखो(ख-उ)पभुक्तये ।
तया मनस्-तापभुवै(वा इ)व किं श्रिया
स्वभार्यये(या इ)व स्व-पदार्थ-वन्ध्यया ॥ ३२ ॥

---

2 30 CRP 2 30 CRB 2 35 CRBh I 2 30 CRC 2 32 CRCa I 2 28 GP 1 109 26 Also CPS 39 38 Also quoted in SRBh 72 49 SRHt 218 18, SV 487 (cf SV 491 ascribed to Kṣemendra)

*a* क्रतुशतैर् (°तै GPy) न यु° GP GPy *b* जानत CRBh I *c* कुबेन्परि CRB कदर्यपरिगत CRP *d* °गृहे प्रयु° GP GPy गच्छति [भु°] SRBh SV हृदयते [भु°] SRHt युज्यत CRP भुज्यत CRBh I
Rathoddhata metre

2 31 CRP 2 31 CRB 2 36 CRBh I 2 31 CRBh 2 27 CRC 2 33 CRCa I 2 29 CRT 2.23 GP 1 109 23 Also CPS 40 39
*a* द्रव्य [भू°] CRT GP GPy *b* पराभृनन् CRBh I पराभृमर्शन् CRP °शृदय CRB °शृष्य CRT GP GPy मुहु मु° CRCa I *d* धन CRBh I

2 32 CRP 2 32 CRB 2 37 CRBh I 2 32 CRBh II 2 32 CRC 2 34

*a* कल्पते CRC वा [या] CRC *b* °भुक्तिये CRBh I भुवव CRP *c* श्रा° [श्रि°] CRBh I *d* स्वभार्ययैव CRBh I कुभार्ययेव (दु° CRC) CRBh II CRC, °दार्थवद्धया CRBh I स्वपरार्थवध्यया CRBh II

Upajati metre (Vamsastha and Indravamśa)

दीना वि-वसना रूक्षाः कपालाङ्कित-पाणयः ।
दर्शयन्ती(न्ति इ)ह लोकानाम् आदातुः फलम् ईदृशम् ॥ ३३ ॥

दानं भोगो नाशस्
तिस्रो गतयो भवन्ति वित्तस्य ।
यो न ददाति न भुङ्क्ते
तस्य तृतीया गतिर् नाशः ॥ ३४ ॥

भिक्षमाणा वदन्ती(न्ति इ)ह देही(हि इ)ति कृपणं वचः ।
अवस्थे(स्था इ)यम् अदानस्य मा भूत् मानः कदाचन ॥ ३५ ॥

---

2.33 CRP 2.33, CRB 2.38, CRBh I 2.33, CRC 2.40, CRCa I 2.30, CRT 2.24, GP 1.109,24. Also CPS 41.42.

*a* नग्ना व्यसनिनो GP, GPy; रूक्षा CRCa I. *c* लोकस्य GP, GPy. *d* अदातुः GP, GPy; °दत्तः CRCa I.

2.34 CRP 2.34, CRB 2.39, CRBh I 2.34, CRC 2.41, CRCa I 2.31. Also CnT II 20.6, CnT III 53.4, CPS 41.43. Also quoted in PS 1.4 ( in B MS quoted *ad* line 45 ), Pts 2.151, HJ 1.173 v 1., VCsr 3.5, v. 1., BhŚ 50, VCsr 3.5, PrC 264, Pras 11.3, NV 2.1, ŚP 390 (ascribed to BhŚ ), SV 478, SRBh 69.15, SRK 6.34, IS 2757, VP 6.8, ST 42.5, SHV f. 70*b*, 86*a*, SS 17.14, SK 2.154, SU 1498, SN 463, SSD 2 f. 135a, JSV 146.7, SKG f. 12.9 (cf. PT 110, Subh 18.5).

*a* नाशः CPS; विनाशम् $XH_2$ in BhŚ; नाशम् $G_4$ in BhS; नाशम् च $W_{1-4}$ in BhŚ. *b* त्रिगस्य CRBh I (scribe's error); हि तस्य $J_2$ in BhŚ; द्रव्यस्य IS. *c* जन्न $T_3$ in BhŚ; न (first) om. CRBh I, $J_2$ in BhŚ; दाति न च भु° $F_5$ in BhŚ; न (second) om. D in BhŚ; न हि $X_1$ in BhŚ; भुंक्तो CRBh I. *d* तस्याऽपि $J_2$ in BhŚ; त्रितया $J_2$ in BhŚ; नाश CRBh I; भवति [ ना° ] $P_1$ H, VC, BhŚ PrC, Pras, NV, ŚP, SRK; भवति $X_1$ in BhŚ; भवत्य् एव T in VC ( the last two *contra metrum* ).

Āryā metre.

2.35 CRP 2.35, CRB 2.40, CRBh 2.35, GP 1.109,25. Also CPS 376.13. Also see SS (OJ) 202.

न देवेभ्यो न विप्रेभ्यो न बन्धुभ्यो न चाऽऽत्मनि ।
कदर्थस्य धनं याति वह्नि-तस्कर-राजसात् ॥ ३६ ॥

अति-क्लेशेन देहस्य धर्मस्याऽतिक्रमेण च ।
अरेर् वा प्रणिपातेन माऽभूत् सोऽर्थः कदाचन ॥ ३७ ॥

विद्या-विघातोऽनभ्यासः शत्रु-घातः सु-नीतिता ।
स्त्रीणां घातः कुचैलत्वं व्याधीनां जीर्ण-भोजनम् ॥ ३८ ॥

तस्करस्य वधो दण्डः कु-मित्रस्याऽल्प-भाषणम् ।
पृथक् शय्या च नारीणां ब्राह्मणस्याऽनिमन्त्रणम् ॥ ३९ ॥

---

*a* भिक्षा° CRBh I; शिक्षयन्ति च याचन्ति GP, GPy, CPS. *b* कृपणा (णा: CPS) जना GP, GPy, CPS. *d* मा भूदेवं भवनपि GP, GPy, CPS.

2.36 CRP 2.36, CRB 2.41, CRBh I 2.36, CRCa I 2.32, GP 1 109,27. Also CPS 377.14.

*a* पितृभ्यो CRP, CRBh I. *b* व° नैव CPS, GP, GPy. *d* अग्नितस्कर-राजसु CPS, GP, GPy; राजसा CRBh I.

2.37 CRP 2.37, CRB 2.42, CRBh I 2.37, GP 1.109,28=CV 16.11 where different readings are noted. Also CNG 181, CNT IV 198, CPS 310.10. Also quoted in MBh 5.38,76*cd*-77*ab*, Śts 82.6-7, Śts 360.8-9, SRBh 379.96, IS 128 Also found in SS (OJ) 272.

*a* योऽस्ति° CRP, CRBh I; ये स्यु (स्युः GP) अर्था [दे°] CV, GP. *b* °क्रमेण CRBh I; तु [च] CV. *c* शत्रूणां [अ°] CV. *d* ते अर्था मा भवन्तु मे CV; मभूवंस्ते GP; ऽथ CRBh I (scribe's error).

Other readings have been recorded in CV 16.11.

This maxim was probably incorporated in the CR version from MBh.

2.38 CRP 2.38, CRB 2.43, CRBh I 2.38, CRCa I 2.33, GP 1.109,29 v. l.

*a* विद्याघातो ह्य् अन° GP, GPy. *b* च श्रीणां (स्त्रीणां GPy) घत: कुचेलता GP, GPy; °घात (°तो CRCa I) CRBh I, CRCa I. c व्याधीनां भोजनाज्जीर्णं GP, GPy (see *d*); घात CRBh I. *d* शत्रोर्घात: मपञ्चता GP, GPy.

2.39 CRP 2.39, CRB 2.44, CRBh I 2.39, CRCa I 2.34, GP 1.109,30. Also CPS 373.2.

*c* तु [च] CPS. *d* °° om. CRP.

जानीयात् प्रेषणे भृत्यान् बान्धवान् व्यसनाऽऽगमे ।
आपत्-काले च मित्राणि भार्यां च विभव-क्षये ॥ ४० ॥

स्त्रीणां द्वि-गुण आहारः प्रज्ञा चै(च ए)व चतुर्-गुणा ।
षड्-गुणो व्यवसायश् च कामश् चाऽष्ट-गुणः स्मृतः ॥ ४१ ॥

न स्वप्नेन जयेन् निद्रां न कामेन स्त्रियं जयेत् ।
ने(न इ)न्धनेन जयेद् वह्निं न मद्येन तृषां जयेत् ॥ ४२ ॥

---

2.40 CRP 2.40, CRB 2.45, CRBh I 2.40, CRT 2.25, GP 1.109,32=CV 1.11, Cv 1.12, CS 1.72, CN 19 where different readings are noted. Also CnT II 2.2, CnT III 1.14, CnT VI 15, CPS 21.56. Also quoted in Vet 4.7, SRBh 115.198, SRHt 191.49, IS 2405, Subh 91. Also found in LN (P) 82, DhN (P) 252, NKy (B) 112.

*a* जानीया प्रो° CRBh I; ज्ञातव्यं CS. *c* मित्र चाऽऽपदि काले च (चापत्सुकालेषु CV, Cv) CRT, GP, GPy, CN, CV, Cv; तथा मित्रं CS. *d* भार्या CRBh I; विभवे (°वः CRBh I) क्षीणे (क्षये CRBh I) CRT, CRBh I.

Other readings have been recorded in CV 1.11, Cv 1.12, CS 1.72 and CN 19.

2.41 CRP 2.41, CRB 2.46, CRBh I 2.41, CRBh 2.35, CRCa I 2.35, CRT 2.26, GP 1.109,33=CV 1.17, Cv 1.18, CN 76 where different readings are quoted. Also CnT II 2.8, CnT III 1.20, CnT VI 21, CPS 23.63. Also quoted in BP in ŚKDr *ad* नारी, HJ 2.118 and 4.8, HS 2.113, HM 2.119, HP 2.105 and 4.8, HN 2.104 and 4.8, HK 2.117 and 4.8, HH 60.22-3, HC 805-6, (cf. NPR 1.14,96 and 1.14,112), NT 59, TP 59, SRBh 162.409 and 348.6, SRK 115.14, IS 7204 and 1082. Also found in LN (P) 161, DhN (P) 164, NKy (B) 206, NŚ (OJ) 13.8, ShD (T) 182.

*a* आहारो द्विगुणः स्त्रीगुणां CN; द्विगुणम् CRBh I; आहारो CRT, CV, Cv, SRBh 348. *b* बुद्धिस् तासां च° CN; बुद्धिस् चाऽपि CV; लज्जा तासां Cv; लज्जा चाऽपि SRBh 348; प्रज्ञां CRP; लज्जा [प्र°] CRT; °गुणः CRCa I. *c* साहसं षड्गुणं चैऽव CV, SRBh 348. *d* कामोऽष्टगुण उच्यते CV; °गुण CRBh I.

Other readings have been recorded in CV 1.17, Cv 1.18 and CN 76.

2.42 CRP 2.42, CRB 2.47, CRBh I 2.42, CRBh II 2.36, CRCa I 2.36, GP 1.109,34. Also CNP II 237, CNG 50. Also quoted in MBh 5.38,82, SRBh 166.573, SRHt 78.4 (ascribed to Mn [?]), IS 3504.

स-मांसैर् भोजनैः स्निग्धैर् मद्यैः स्वादु-रसाऽऽदिकैः ।
वस्त्रैर् मनो-ज्ञैर् माल्यैश् च स्त्रीणां कामः प्रवर्धते ॥ ४३ ॥

ब्रह्म-चर्येऽपि नाऽऽश्वासः स्त्रीणां मन्मथ-चेष्टितम् ।
सु-रूपं पुरुषं दृष्ट्वा भगस् तासां हि क्लिद्यते ॥ ४४ ॥

सु-रूपं पुरुषं दृष्ट्वा भ्रातरं यदि वा सुतम् ।
योनिः क्लिद्यति नारीणां मुनिर् वचनम् अब्रवीत् ॥ ४५ ॥

---

*a* नाराने वर्जयेत् निद्रा CNP II. *b* न कामिन CNP II; ज° स्त्रियः CNG, MBh. *c* न चेन् धनैर् यजेद् ब° GP, GPy; न चेत् वनैर् यते वह्नि CNP II (*sic* !); अग्निं [ब°] CNG, MBh in Calcutta ed., SRHt; अग्निं MBh (Dutt's edition). *d* निर्मेधेन तृषा त्यजेत् CNP II; न चार्थेन जयेद् धनम् CNG; न पानेन सुरां ज° (ज° सु° SRHt) MBh, SRBh, SRHt; तृषं CRBh I, CRP; स्त्रियं [तृ°] CRBh II.

This maxim was probably incorporated in the CR version from *MBh.*

**2.43** CRP 2.43, CRB 2.48, CRBh I 2.43, CRCa I 2.37, GP 1.109,35.

*a* भोजनै CRBh I; स्निग्धै CRBh I. *b* सर्वैर् गन्धविलेपनैः GP; मद्यैः शाधुसुर-सुरैः GPy; मध्यैर् मधुरसायनैः CRCa I. *c* मनोरमैर् माल्यैः GP, GPy. *d* कामः स्त्रीषु विजृम्भते GP, GPy.

**2.44** CRP 2.44, CRB 2.49, CRBh I 2.44, CRCa I 2.38, GP 1.109, 35 v. l. (cf. CR 2.45).

*a* ऽश्वासेन् CRBh I; वक्तव्यं [ना°] GP, GPy. *b* मासं [स्त्री°] GP, GPy; °चेष्टया CRCa I; °चेष्टिते CRP, CRBh I. *c* हृष्यं हि [सु°] GP, GPy. *d* तासां हि लिप्यते भगः CRCa I; योनिः प्रक्लिद्यते स्त्रियाः GP, GPy.

**2.45** CRP 2.45, CRBh I 2.45, CRCa I 2.39, GP 1.109,37. Also CNI I 159, CNF 38, CNPN 53, CnT II 23.9, CnT III 57.3. Also quoted in HS 1.110, HH 24.18-9, HC 30.10-1, MBh in ŚKDr *ad* सुवेशं, SRBh 349.40, IS 7135. (Cf. *MBh* 13.38,26 Nilakaṇṭha *ad* MBh, Appendix to MBh 4.14, 28-30 ([Bhandarkar ed.], VCsr II 13 (p. 259 *b*), CNI I 159, Subh (IS 7128). IS 7107,7144 ).

*a* Most of the texts have स्वरूपं; सुवेष (शं) GP, GPy, HS, HH, CNF, CNI CNPN; सरूप CnT II, CnT III; सुन्दर Nil *ad* MBh, NT. *b* पितर भ्रातर सु° CNI; पितर [य °वा] Nil *ad* MBh, NT. *c* योनिम् कन्दति CNI; योनिर् द्रवति Nil. *ad* BhM; स्यदति [क्लि°] CNF. *d* सत्य सत्यं हि शौनक (नारदः CNI; नारद CNPN, CNF, H) GP, GPy, CNI I, CNF, CNPN, H; सत्यं सत्यं जनार्दन Nil *ad* MBh, NT; तथ्य मे नुहि केशव NT; आमपात्रमिवाम्भसा SRBh.

नद्यश् च नार्यश् च सम-स्वभावाः
स्वातन्त्र्यभावेन बलाऽधिकत्वात् ।
तोयैश् च दोषैश् च निपातयन्ति
नद्यो हि कूलानि कुलानि नार्यः ॥ ४६ ॥

नदी पातयते कूलं नारी पातयते कुलम् ।
नदीनां चै(च ए)व नारीणां स्व-च्छन्द-ललिता गतिः ॥ ४७ ॥

नाऽग्निस् तृप्यति काष्ठानां नाऽऽपगानां महो(ह उ)दधिः ।
नाऽन्तकः सर्व-भूतानां न पुंसां वाम-लोचना ॥ ४८ ॥

---

GPy adds fifteen and sixth pāda's reading: गृहं वा भिक्षुकं वापम् इच्छन्ति सततं स्त्रियः.

2.46 CRP 2.46, CRB 2.50, CRBb I 2.46, CRBh II 2.38, CRC 2.42, GP 1.109,38. Also CPS 42.46. Also quoted in PtsK 1.227, IS 3309, (cf. MBh 13.19,94, CR 2.47, LN (P) 104, NKy (B) 130).

*a* नद्यश् CRBb I; समः स्वभावः CRBb I; सहज प्रभावात् PtsK; *b* स्वातन्त्र्यभावेन CRC, CPS; कुल्यानि कूलानि कुलानि तासम् PtsK; भावे गमनादिकं च GP, GPy; बलादिकत्वात् CRP. *c* तर्यांश् CRP, CRBh I.

Indravajra metre.

2.47 CRP 2.47, CRBb I 2.47, CRBh II 2.37, CRCa 2.40, GP 1.109,39 = CS 2.76 where different readings are noted. Also CNP II 168, CNI I 171, CNG 51, CNT IV 170, CNM 164, CNMN 130, CnT II 19.12, CnT III 52.7. Also quoted in IS 7561; (cf. CR 2.46)

*a* तीरं [कू°] CNI I. *c* नारीणां च नदीनां च GP, GPy, CS, CNG, CNP II, CNM. *d* स्वच्छन्दा CRP, GP, GPy (better); गति CRBh I.

Other readings have been recorded in CS 2.78.

2.48 CRP 2.48, CRB 2.51, CRBh I 2.48, CRCa I 2.41, CRT 2.27, CRCa II 16, GP 1.109,40 = Cv 7.8 where different readings are recorded. Also CNF 41, CNI I 172, CNP I 13, CNT IV 12, CNM 12, CNMN 12, CnT II 16.9, CnT III 7b 5 and 53.17, CPS 377.15. Also quoted in MBh 5.39,7 and 13.38,25, R 5.50,12 (cf. R 5.54,28-9), BhŚ 571 PP 1.106, Pts 1.137, HJ 2.114, HS 2.111, HM 2.115, HP 2.103, HN 2.102, HK 2.113, HH 60.4-5, HC 79.9-10, VCsr VI 10, NPR 1.14,99, SRBh 154.60, ŚP 1498, SRHt 78.7, IS 3547, VP 9.86, Subh 218, SRH 54.7, SHV f 97b 18, SS 35.10, SSD 2 f 158 f, JS 409, SKG f 46. Also found in [illegible] (OJ) 437.

न तृप्तिर् अस्ति मिष्टानाम् इष्टानां प्रिय-वादिनाम् ।
सुतानां च सुखानां च जीवितस्य धनस्य च ॥ ४९ ॥

तृप्येन् न राजा धन-संचयेन
न सागरो भूमि-जलाऽऽगमेन ।
न पण्डितः साधु-सुभाषितेन
तृप्येन् न चक्षुः प्रिय-दर्शनेन ॥ ५० ॥

स्व कर्म-धर्माऽर्जित-जीवितानां
स्वेष्वे(षु ए)व दारेषु सदा रतानाम् ।
जिते(त इ)न्द्रियाणाम् अतिथि-प्रियाणां
गृहेऽपि मोक्षः पुरुषो(ष उ)त्तमानाम् ॥ ५१ ॥

---

*b* न जलानां महोदधि CRCa II. *d* °लोचनाम् CRBh I; लोचना: CRP.

Other readings have been recorded in Cv 7.8.

This maxim was probably incorporated in the CR version from MBh.

2.49 CRP 2.49, CRB 2.52, CRBh I 2.49, CRBh II 2.39 *cd/ab*, CRC 2.43, CRT 2.28, GP 1.109,41. Also CPS 48.60 and 378.17.

*a* मृष्टा° CRB; मित्राणाम् CRP, CRBh I; शिष्टानाम् GP, GPy, CPS 378 (only). *b* मिष्टानां CPS 378 (only). *c* सु° च सु° tr. GP, GPy; सुखाना CRBh II; दुःखानां च सुतानां च CPS 378 (only). *d* जीवितस्य CRBh I; वत्स [ ध° ] GP, GPy.

2.50 CRP 2.50, CRB 2.53, CRBh I 2.50, CRBh II 2.40, CRC 2.45, CRCa I 2.42, CRT 2.29, GP 1.109,42. Also CPS 49.61. Cf. IS 2595 and 3273. Also see Ślt (OJ) 62, ShD (T) 111; SRN (T) 29, LN (P) 35, DbN (P) 352.

*a* राजा न तृप्तो GP, GPy; राज CRBh I; °येण CRBh I. *b* सागरस्तृप्तिमगा-ज्जलेन GP, GPy; भूरिज° CRP, CRBh I, CRCa I. *c* पण्डित CRBh I; पण्डितस् तृप्यति मा° GP, GPy; °सुभाषणेन CRBh II, CRCa I. *d* दृसं न न चतुर् नृपद° GP, GPy; चक्षु CRCa I.

Upajāti metre (Indravajrā and Upendravarjra).

2.51 CRP 2.51, CRB 2.54, CRBh I 2.51, CRBh II 2.41, CRC 2.46, CRCa I 2.43, CRT 2.30, GP 1.109,43. Also CPS 49.63. Also quoted in Padma-purāṇa, Sṛṣṭikhaṇḍa 19.318.

| | |
|---|---|
| मनोऽनुकूलाः प्रमदा | रूपवत्यः स्व(सु अ)लंकृताः । |
| वासः प्रासाद-पृष्ठेषु | भवन्ति शुभ-कर्मणाम् ॥ ५२ ॥ |

निपानम् इव मण्डूकाः सरः पूर्णम् इवाऽण्डजाः ।
शुभ-कर्माणम् आयान्ति साहाय्याश् च धनानि च ॥ ५३ ॥

शनैर् अर्थाः शनैः पन्थाः शनैः पर्वतम् आरुहेत् ।
शनैर् विद्या च धर्मश् च व्यायामश् च शनैः शनैः ॥ ५४ ॥

---

*a* शुकर्म° CRCa I; °त्रिकानां CRB, CRC, CRCa II, CPS. *b* खेहेष CRBh I; शाखेषु [ खे° ] GP, GPy.

Upajāti verse ( Indravajrā and Upendravajrā).

2.52 CRP 2.52, CRB 2.55, CRBh I 2.52, CRBh II 2,42, CRC 2.47, GP 1,109,44. Also CPS 44.50. Also quoted in MBh 12,295,21. Also found in SS (OJ) 29.

*a* ऽनुकूला CRBh I; प्रमदाः MBh, CPS. *b* °कृता CRBh I; सदश्वाः MBh. *c* वासः CRP; वासा CRBh I; पृष्ठेषु CRC, CRB. *d* स्वर्गः स्यात् शुभ° GP, GPy; सत्सर्वं तपसः फलम् MBh; भवति CRBh I; °कर्मिणाम् CRBh I, CRP.

This maxim was Probably incorporated in the CR version from MBh.

2.53 CRP 2.53, CRB 2.56, CRBh I 2.53 CRBh II 2.43, CRC 2.48. Also CPS 43.49. Also quoted in PS 2.55, PN 1.52, PT 2.84, PTem 2.95, PP 2.112, PRE 2.59, HJ 1.185, HS 1.165, HM 1.171, HP 1.133, HN 1.134, HK 1.173, HH 31.10-1, HC 42.11-2, SRBh 82.9, IS 3727, VP 7.8. Also fonnd in SS (OJ) 30.

*a* मण्डुकाः HH. *b* सरः पूर्णो...I in PS; सर M in PP; पूर्णकायम् इवाण्डजाः CRBh I, M in PP, *c* सोद्योगं नरम् ( सयम् PS, PP, PRE) आ° H, PS, PTem,- PP, PRE, SRBh; सोद्योगं Pr in PP; समुपाऽयान्ति P in HS. *d* विवाशः ( प्रवणाः HP, I in HK; विवसाः NC Edd. in MS ) सर्वसंपदः (सन्मुखाः A in HP on the margin) H, PTem, SRBh.

2.54 CRP 2.54, CRB 2,57, CRBh I 2,54, CRBh II 2.44 CRC 2.49, CRCa I 2.44, GP 1.109,46=Cv 6.14, CS 1.35 where different readings are noted. Also CnT II 9.2, CnT III 6.10, CnT VI 100, CPS 44.51. Also quoted in IS 6391, CKI 32, Subh 151. Cf. SRBh 157,204. Also found in TK (OJ) 45.

शाश्वतं विधिवद् दानं शाश्वतं सत्य-भाषणम् ।
शाश्वती प्रभुणा विद्या हृद्यं मित्रं च शाश्वतम् ॥ ५५ ॥

न भोजन-विलम्बी स्यान् न च स्यात् स्त्रीषु सेवकः ।
सु-दूरम् अपि विद्यार्थी व्रजेद् गरुड-वेगवत् ॥ ५६ ॥

ये बाल-भावे न पठन्ति विद्यां
ये यौवन-स्था अ-धना अ-दाराः ।
ते शोचनीया इह जीव-लोके
मनुष्य-रूपेण मृगाश् चरन्ति ॥ ५७ ॥

---

*a* अर्धः CRC, CRBh I, CRBh II, CRP, CRCa I; शनैर् Cv, CS; विद्या शनैर् अर्थाः GP; GPy; विद्या [ प° ] Cv, CS. *b* शनै CRCa I; पर्वतमंक्षहेत् CRP; पर्वते धनम् CRBh II; आरोहेत् CRC. *c* शनै कामं च धर्मं च GP, GPy; शनैर् धर्मश् च कामश् च Cv, CS: विद्याश् ( °धा° CRBh II; scribe's error ) च CRBh I, CRBh II; धर्मेण CRCa I. *d* पर्वतानि श° GP, GPy; व्यायमश् CRCa I.

Other variants have been recorded in Cv 6.14 and CS 1.35.

**2.55** CRP 2.55, CRB 2.58, CRBh I 2.55, CRBh II 2.45, CRC 2.50, CRC I 2.45, GP 1.109,47. Also CPS 44.52.

*a* भाश्वतं CRC (printer's error); देवपूजात्रे [ °वि ] GP, GPy. *b* विप्रदानं च शाश्वतम् GP, GPy; सात्य° CRCa I; °भाषितं CRBh I. *c* शाश्वत CPS ( printer's error ); शाश्वत सत्रु° GP, GPy. *d* हर्षं CRCa I; सुहृन् GP, GPy.

**2.56** CRP 2.56, CRB 2.59, CRBh I 2.56, CRBh II 2.46, CRC 2.51, CRCa I 2.46, GP 1.109,49. Also CPS 45.53.

*a* पठने भोजने ( भोजने भोजन GPy ) चित्तं GP, GPy; भोजने वि° CRC, CPS; °विलंब स्या CRBh I; स्यात् CPS. *b* न कुर्याच् शास्त्रमेवकः GP, GPy. *c* स दू° CRBh I, GPy ( GP as above ). *d* वृजे° CRBh II; °वेगवित CRBh I; °वेगवान् GP GPy.

**2.57** CRP 2.57, CRB 2.60, CRBh I 2.57, CRBh II 2.47, CRC 2.52, CRCa I 2.47, GP 1.109,48 v. l. Also CPS 45.54. Also quoted in SRBh 384.294. ( Cf. VCsr 9.1, Vet 21.13, SV 3436, IS 5550, Subh 101, CR 2.50 ).

तर्कोऽप्रतिष्ठः श्रुतयो विभिन्ना
नाऽसौ मुनिर् यस्य मतं न भिन्नम् ।
धर्मस्य मूलं निहितं गुहायां
महा-जनो येन गतः स पन्थाः ॥ ५८ ॥

आकारैर् इङ्गितैर् गत्या चेष्टया भाषितेन च ।
नेत्र-वक्त्र-विकाराभ्यां ज्ञायतेऽन्तर्गतं मनः ॥ ५९ ॥

---

*a* ये हाल° CRCa I; °मावान् न° GP, GPy; विद्या CRBb I, CRCa I. *b* कामाद्गता यौवनजहविषाः GP, GPy, VC; अधीराः CRC, CPS; प्रथनात् सदाराः CRBh. *c* ते वृद्धभावे (°काले GP) परिभूयमाना (°नाः GP) VC, GP; शौच° CRBh; वृद्ध° GP. *d* दह्यन्ति गात्रं (संदह्यमानाः GP) शिशिरेऽप पद्मः (यथाब्जम् GP) VC, GP; भृगा CRBh I.

Upajāti metre (Indravajrā and Upendravajrā).

2.58 CRP 2.58, CRB 2.61, CRBh I 2.58, CRBh II 2.48, CRC 2.54, GP 1.109,51. Also CPS 46.55. Also quoted in MBh 3.312,115, SV 3437 (ascribed to Diṅnāga), SRHt 200.151, IS 2505, Subh 163, VP 9.10.

■ तर्कै CRBh II, GP (GPy as above), Subh; °प्रतिष्ठाः (°ष्ठः Subh) CRBh II, Subh; °प्रतिष्ठा GP, (GPy as above); श्रुतियोर् CRBh I; स्मृतयो [श्रु°] Subh; विभिन्नाः CRC, CPS, GP, GPy; विभिन्नार् CRBh I. *b* नैको ऋषिर् [ना°] MBh; न चाप्यृषिरेकोनमस्ति कि चित् SRHt; नासावृषिर् न° GP, GPy, Subh; इसौमुनिर् CRBh I; मतं Subh; न च (चो CRBh I, SV) प्रमाणम् CRP, CRBh I, CRBh II, SV; प्रमाणम् [भि°] MBh. *c* तत्त्वं (°त्त्व) [मू°] CRC, CPS, GP, GPy, MBh, Subh. *d* याव [ये°] CRBh I; गतस्य प° CRBh I, CRBh II; स प° Subh.

This maxim was probably incorporated in the CR version from MBh.
Upajāti metre (Indravajrā and Upendravajrā).

2.59 CRP 2.59, CRB 2.62, CRBh I 2.59, CRBh II 2.49, CRC 2.55, CRCa I 2.49, GP 1.109,52. Also CNG 259, CnT II 27,8, CPS 46.56. Also quoted in Mn 8.26, PP 1.21, Pts 1.44, HJ 2.47, HS *ad* 2.46, HM 2.50, HK 2.50, HH 47.15-6, HC 63.5-6 and 106.3-4, Vet 1.8, GMBh, GMH 11.23, PSDh 3.1;55.12, SC 49.17, Apar 620.21-2, SarV. 104.8-9, VRV 71.13-4, VyMa 313.11-2, VyN 70.2-4, (wrongly ascribed to N), VyS 24, VyP 21,31, VyK 32, VySau 41, VVy 10, GR *ad* Mn 8.26, SCM 41,42, NV 10.27;117.10-1, SRBh 147,226, SV 2803, SRHt 146,29, IS 848, Subh 186 and 225. Also found in TK (OJ) 11, Śit (OJ) 82. (Cf. Y 2.13-5 M 1.193-6 and Pariśiṣṭa 10.1, Bṛh 5.43 a, Katy 386, Śaṅkha Likhita in VRV 124.13, VyC 399-400, R in Vyavahāradatta 51.

उदीरितोऽर्थः पशुनाऽपि गृह्यते
हयाश् च नागाश् च वहन्ति चोदिताः ।
अनुक्तम् अप्यू(पि ऊ)हति पण्डितो जनः
परे(र-इ)ङ्गित-ज्ञान-फला हि बुद्धयः ॥ ६० ॥

---

*a* अकारोंतैरिङ्गितैर् CRBh I; आकारेणेंऽङ्गितैर् ( °रेणे° CRBh II, CRP, CRB, Apar, SarV, VyK, SV) CRBh II, CRP, CRB, Apar, SarV, VyK, SV; अङ्गितैर N, *psl* PL$_1$ PrMBh in PP. *b* भाषणेन CRC, CRP, H, P, Vet, VyN, NV, SRBh, SarV; हर्षितेन GMBh; तु [ च ] GP, GPy. *c* °व° om. CRBh II; °विकारैश् च Mn, Pts, Vet and *nibandha-s* based on Mn; °विकारेण PP, H, NV, BDce in Vet, VRV, VyK. *d* लक्ष्यते [ ज्ञा° ] GP, GPy, Pts, *d* in Vet, VyK; नृणाम् CRC, CPS; गृह्यते [ ज्ञा° ] Mn and *nibandha-s* based on Mn. (but Govindaraja's commentary also quoted in Mn Jhā's ed. as above ), शब° GR; मणः VRV.

This maxim was probably incoporated in the CR version from MBh (cf. CStMn No. 26).

2.60 CRP 2.60, CRB 2.63, CRBh I 2.60, CRC 2.56, CRCa I 2.50, GP 1.109, 53. *cd/ab* Also CNP II 30, CNI I 16, CPS 46.57, Also PS 1.19, PN 2.14, PT 1.13, PTem 1.16, PP 1.20, Pts 1.43, PRE 1.18, HJ 2.46, HS 2.46, HM 2.49, HP 2.43, HN 2.42, HK 2.49, HH 47.11-4, HC 63.1-4, VCjr 22.5.1 p. 322, Śts 45.11-2, Śto 348.27-8, Vet 1.7, BhŚ 427. SRBh 174.911, ŚP 200, IS 1236, VP 3.3, SuM 9.5, SRK 33.9, SRHt 37.36, SHV f 31 b, 99, SS 14.13, SK f. 147 *b*, SN 725, SSD 2f. 102a, SMV 9.15. *Cf.* MK 114.

■ उदीपितो CRBh I; उदीरतो CNI I; तदी° CRB; °इतार्थः CRC, CPS, GP, GPy; बुध्यते HN, P in Śts, A in Vet; बुध्यतो NC in HP. *b* ह° च° tr. Śto; वमन्ति I in PS; वदन्ति Śto; वृद्धयः [व°] C in Śts; नो [चो] CNI I: नोदिताः CNP II, c in HP, PP, G in VC, Śts, Vet, BhŚ; ऽदिता CRBh I; देशितम् [चो°] GP, GPy; देशिताः HJ, HM, HP, HK, HH, HC, PN, VC; ताडिताः B in HP; चोदिताः B in Śto; बुध्यते HS, P in Śts; योजिताः P in HS; देवेरिताः शिवः (!) a in Vet; प्रेरिताः IS; योजिताः IS. *c* अनुक्तमेभ्यः इति प° CRBh I; अनुक्तम् अमूहति CRCa I; अनक्रम् G in VC. *d* परं हितज्ञानबला CNI I; परेत भीत ज्ञातु फला ° IS; °ङ्गिता Pr in PP; °फल E in Vet; °फ्ला IS; ऽपि [हि] CNP II; वृद्धय C in Śts.

Vaṁśastha metre.

केचिद् भयेन विभजन्ति विनीत-भावम्
अन्ये जना विभव-लोभ-कृत-प्रयत्नाः ।
केचिच् च साधु-जन-संसदि कीर्ति-लोभात्
सद्-भाववान् जगति कोऽपि न साधुरस्ति ॥६१॥

केचित् स्वभाव-गुणिनोऽत्र यथा कपित्था
वार्ताक-पाक-सदृशा भुवि सन्ति चाऽन्ये ।
दृष्टा उपाण-फल-तुल्य-जडास् तथाऽन्ये
येन त्रिधै(धा ए)व भुवन-त्रितयेऽपि सत्त्वाः ॥ ६२ ॥

इति चाणक्य-राजनीति शास्त्रे द्वितीयोऽध्यायः ॥ २ ॥

---

2.61 CRP 2.61, CRB 2.64, CRBh I 2.61, CRBh II 2.51, CRC 2.57, CRCa I 2.51. Also CPS 47.58. Also quoted in SV 3449 (ascribed to Candragopin).

*a* हि भजन्ति SV. *b* जरा CRB; विभवलोकहृत° (°लोभहृता: CRBh II) CRBh I CRBh II. *c* °संसत्सु CRBh I.

Vasantatilakā metre.

2.62 CRP 2.62, CRB 2.65, CRBh I 2.62, CRBh II 2.52, CRC 2.58, Also CPS 47.59.

*a* प्रभाव° CRBh I; गुणा° CRBh II; °नोऽपि CRP, CRBh I, CRBh II; °त्थाः CPS. *b* वार्तकुमा° (°कवाक° CRBh I) CRC, CPS, CRBh I. *c* दृष्टान् CRBh I; दृष्टा CRBh II; °फलतस्व° CRBh I. *d* भुवने° CRBh II; त्रिभेवि CRP; °त्रये॑वि CRP; सत्ता CRBh I

Vasantatilakā metre.

# अथ तृतीयोऽध्यायः ॥ ३ ॥

यो ध्रुवाणि परित्यज्य ह्य(हि अ)ध्रुवाणि निषेवते ।
ध्रुवाणि तस्य नश्यन्ति ह्य(हि अ)ध्रुवं नष्टम् एव हि ॥ १ ॥

प्रागल्भ्य-हीनस्य नरस्य विद्या
शस्त्रं यथा का-पुरुषस्य हस्ते ।
न तुष्टिम् उत्पादयते परेषाम्
अन्धस्य दारा इव दर्शनीयाः ॥ २ ॥

---

3.1 CRP 3.1, CRB 3.1, CRBh I 3.1, CRBh II 3.1, CRC 3.1, CRCa I 3.1, CRT 3.1, CRCa II 17, GP 1.110,1 (Also quoted in Smṛtitattva of Raghunandana I 351.24-5)=CV 1.13, Cv 1.14, CN 61 where different readings are noted. Also CnT II 2.4, CnT III 1.16, CnT VI 17, CPS 22.59. Also quoted in PP 2.143, Pts 2.137, HJ 1.227, HS 1.205, HM 1.210, HP 1.171, HN 1.172, HK 1.212, HH 38.20-1, HC 51.16-7, SRBh 162.394, SRHt 194.80, IS 5600, Subh 218, Sskr 54.

*b* ह्य् om. CRCa II, GPy (GP as above), Cv; त्व् [ह्य्] CRP, CRCa I; स्व् [ह्य्] CRBh I; अध्रुवं परिषेवते CV, CN; च सेवते CRC, CRT; तसेवयेद् CRCa II. *c* अध्रुवं CRC. *d* ह्य् om. CRCa II, GP, GPy, CV, Cv, CN; स्व् [ह्य्] CRBh II; अध्रुवैर्नष्टचेतसः CRBh I, CRBh II, CRP, CRCa I; च [हि] CRT, GP, GPy, CV, Cv, CN.

Other readings have been recorded in CV 1.13, Cv 1.14 and CN 61.

3.2 CRP 3.2, CRB 3.2, CRBh I 3.2, CRBh II 3.2, CRC 3.2, CRCa I 3.2, GP 1.110,2. Also CPS 57.21. Also quoted in SRBh 173.856, SRK 248.65, Jyotistattva in ŚKDr *ad* प्रागल्भ्य, IS 4297.

*a* प्रागल्भ° CRBh I; वाग्यन्त्रहीनस्य GP (GPy as above). *b* कापुरुषास्य CRBh II. *c* तृप्तिम्° ŚKDr; शरीरे [प°] GP, GPy, ŚKDr, SRBh, SRK. *d* वृद्धस्य [अ°] ŚKDr, SRBh, SRK; वर्जनीयाः CRP, CRBh I, CRCa I.

Upajati metre (Indravajrā and Upendravajrā).

भोज्यं भोजन-शक्तिश् च रति-शक्तिर् वर-स्त्रियः ।
विभवो दान-शक्तिश् च नाऽल्पस्य तपसः फलम् ॥ ३ ॥

अग्नि-होत्र-फला वेदाः शील-वृत्ति-फलं श्रुतम् ।
रति-पुत्र-फला दारा दान-भोग-फलं धनम् ॥ ४ ॥

वरयेत् कुल-जां प्राज्ञो वि-रूपाम् अपि कन्यकाम् ।
सु-रूपा च वि-रूपा च विवाहे सदृशी वधूः ॥ ५ ॥

---

3.3 CRP 3.3, CRB 3.3, CRBh I 3.3, CRBh II 3.4, CRCa I 3.4, CRT 3.2, GP 1.110,3=CV 2.2, Cv 2.2, CS 1.94, CN 50 where different readings are noted. Also CnT II 2.12, CnT III 2.4, CnT VI 25, CPS 24.1. Also quoted in ŚKDr *ad* भोज्य, Pras 23.7, SRBh 155. 121, ŚP 490, SRK 223.17, IS 4640, VP 9.66.

*b* वराः स्त्रियः CRT, GP, GPy; वरास्त्रियः CRBh I (*sic* !). ■ विभवे CRP.

Other readings have been recorded in CV 2.2, Cv 2.2, CS 1,94 and CN 50.

3.4 CRP 3.4, CRB 3.4, CRBh I 3.4, CRBh II 3 5, CRC 3.3, CRT 3,3, GP 1.110,4=Cv 8,4, CS 3.88 where different readings are noted. Also CNP II 9, CNG 54, CNF 106, CNPh 19, CNI II 78, CLS 3.2, CPS 58.22. Also quoted in MBh 2.5,112 *ad*/*cb* and 5.38,66 *cd*-67 *ab*, PP 2.150, Pts 2.147, PtsK 2.154, SRBh 165.536, SV 3482, SRHt 237.21, IS 71, NT 87. Also found in NŚ (OJ) 1.14, TK (OJ) 17 *ad*/*cb*, SS (OJ) 183. (Cf. CNG 311, VCsr 11.2, VCmr 5.60-1, VCjr 5.5).

*a* वेदा CRB. *b* शीलं मखफलं TK (OJ); °वृत्त° CRP, Cv, CS; शुभम् GP (GPy as above). *c* नार्यो [दा°] CS, TK (OJ). *d* दानशक्तिफलं CRC दत्तभुक्तफलं CRT, GP, GPy, CS, Cv, SV, SRHt; दानभुक्तिफलं TK (OJ).

Other readings have been recorded in Cv 8.4 and CS 3.88.

This maxim was probably incorporated in the CR version from MBh.

3.5 CRP 3.5, CRB 3.5, CRBh I 3.5, CRBh II 3.6, CRC 3.4, CRCa I 3.5, CRT 3.4, GP 1.110,5 *ab*/*dc*=CV 1.14, Cv 1.15, CS 2.61 where different readigs are noted. Also CNPh 20, CNI I 154, CNG 165, CnT II 2.6 and 25.6, CnT III 1.18, CnT V 19, CnT VII 12, CPS 22.60. Also quoted in Vct 7.4, IS 5982. Also found in TK (OJ) 30.

■ पालयेत् CRC; वरेद CRC; कुब्जा CRBh I. *b* विरूपाम् CRCa I. *c* स्वरूपी (स्वरूपां Cv) न नीचस्य CV, Cv; CS; स्वरूपां CRT; वि° च सु° tr. CRCa I; सुविनीता च [च वि°] CRT; सुरूपां सुनितम्बां च GP, GPy. *d* सुवपन् कुल विपत्ते CRT;

| | |
|---|---|
| ययोर् एव समं वित्तं | ययोर् एव समं कुलम् । |
| तयोः सख्यं विवाहश् च | न तु पुष्ट-विपुष्टयोः ॥ ६ ॥ |
| हविर् देव-कुलाद् ग्राह्यं | बालाद् अपि सु-भाषितम् । |
| अ-मेध्यात् काञ्चनं ग्राह्यं | स्त्री-रत्नम् अ-कुलाद् अपि ॥ ७ ॥ |
| सर्व-स्पृग् अपि गौर् वन्द्या | ग्राह्यो वह्निर् यतस् ततः । |
| पेयोऽपि चर्म-गः सोम्यः | पुत्रः पूतः स्व-देह-जः ॥ ८ ॥ |

---

नाकुलीनां कदाचन GP, GPy; विवाहः सदृशे कुले CV, Cv, CS; वधुः CRBh I.

Other readings, have been recorded in CV 1.14, Cv 1.15 and CS 2.61.

3.6 CRP 3.6, CRB 3.6, CRBh I 3.6, CRBh II 3.7, CRC 3.5, CRCa I 3.6. Also CPS 58.23. Also quoted in MBh 1.132,10, PP 1.288 and 3.190, Pts 1.281 and 2.27, PtsK 1.313 and 3.220, PRE 3.75, PT 3.76, PTem 3.87, PS 3.53, PN 3.43, Vet 3.1 (p. 114 v. 1.), ŚP 1475, SRBh 144.49 (marked in the *pratīka* index but not found in the text), IS 5318. (Cf. HJ 2.166, HS 2.156, HM 2.166, HK 2.164, HP 2.152, HN 2.151, HH 68.25-6).

*a* दानं [वि°] CRCa II; वित्तं [वि°] CRBh II; वित्तं P in PP. *b* रूपम् [कु°] IS; श्रुतम् [कु°] MBh. *c* तयोर् विवाहो मैत्री च CRC, CPS; तयोर् मैत्री विवाहश् च Pts, PtsK, ŚP; तयोर् विवाहः (°ह Pr in PP) सख्यं (सं° Pr in PP) च MBh, PP, PtsK 3.220, PRE, PS; तयो सख्यं CRBh I; तयोस् PT (Ptem as above). *d* पुष्टिविपुष्टयोः CRBh II; °ष्टयो CRBh I, PtsK 3.220.

This maxim was probably incorporated in the CR version from MBh.

3.7 CRP 3.7, CRB 3.7, CRBh I 3.7, CRBh II 3.8 CRC 3.6 CRCa I 3.7, CRT 3.5, GP 1.110,7 (GPy om). (Cf. CRC 3.7, GP 1.110,8, CV 1.16, Cv 1.17, CS 2.62).

*a* विषाद् अप्य् अमृत CRT (cf CRC 3.7, GP 1.110,8); °कुल CRBh I *d* स्त्रीरत्नं दुष्कु° CRC, CRT; दुष्कुलाद् GP.

3.8 CRP 3.8, CRB 3.8, CRBh I 3.8, CRBh II 3.9, CRC 3.8, CRCa I 3.8.

*a* सर्वस्पर्शोपि (°स्पृ° CRBh II, CRCa I) CRP, CRBh I, CRBh II, CRCa I; गो [गौर्] CRCa I; वन्द्या CRBh I; वन्द्या CRC. *b* वह्नि CRBh I. *c* पयो (पे° दे° CRBh II; से° CRBh I) CRC, CRBh II; CRBh I; चर्मसं सौम्यं CRC; चर्मगः [च°] CRBh II; सोमः CRP, CRBh I, CRBh II. *d* पूत CRBh I; देहे° CRCa ~

सु-कुले योजयेत् कन्यां पुत्रं विद्यासु योजयेत् ।
व्यसने योजयेच् छत्रुम् इष्टं धर्मे नियोजयेत् ॥ ९ ॥

स्थानेष्वे(ष्व् ए)व नियोज्यानि भृत्याश् चाऽऽभरणानि च ।
न हि चूडा-मणिः पादे प्रभवामी(मि इ)ति बध्यते ॥ १० ॥

चूडा-मणेः समुद्रो(द्र-ऊ)र्मि- घट्टनात् खण्डनं वरम् ।
अथवा पृथिवी-पालः मूर्ध्नि - पाद-प्रसाधिका ॥ ११ ॥

---

3.9 CRP 3.9, CRB 3.9, CRBh I 3.9, CRBh II 3.10, CRC 3.9 *ad/cb*, CRCa I 3.9, CRT 3.7, GP 1.110,10 = CV 3.3, CS 1.31 where different readings are noted. Also CvP IV 7.6, CvTb 7.7, CNP I 16, CNG 53, CNT IV 14, CNM 15, CNMN 15, CnT II 9.8, CnT III 7.4, CnT VII 17, CnT I 4, CPS 51,3. Also quoted in SRBh 160.341, SRK 249.69, SuM 23.12, IS 7058.

*a* कुले नियोजयेद् भक्तं GP, GPy; स्वकु° (स्व° CRBh II; स° CRBh I) CRC, CRT, CRBh II, CRBh I; कन्या CRBh. *b* पुत्रे CRBh I. *c* व्यसनं CRCa I; योजयेच् CRT (printer's error). *d* मित्रं धर्मेण यो° CRT, CRC; CS; शिष्टं CRP, CRBh I; धर्मेण यो° CV, CS.

Other readings have been recorded in CV 3.3 and CS 1.31.

3.10 CRP 3.10, CRB 3.10, CRBh I 3.10, CRBh II 3.11 *cd/ab*, CRC 3.10, CRT 3.8, GP 1.110, 11. Also CNG 56, CPS 59.24. Also quoted in PS 1.34, PT 1.31, PTem 1.35, PP 1.60, Pts 1.72, PtsK 1.82, PRE 1.35, HJ 2.70, HS 2.70 (cf. HS 4.11, HM 2.71, HP 2.64, HN 2.63, HK 2.71, HH 50, 16-7 (cf. HH 102 3-4), HC 66. 10-1, SV 2844, SRBh 164.480, IS 7221, VP 9.8.

*a* स्थान एव हि (नि IS) युज्यन्ते (नियोज्यन्ते HS, HM, HP, HN, HK) H; स्थानेषु NB in PS; नियुञ्जीत CRB; नियोक्तव्या CNG; प्रयोक्तव्या [नि°] GP, GPy; नियोज्यन्ते HIO in PS; पियोज्यानि TP; नियुज्यन्ते PS; विनियोज्यन्ते B in PS; विनियुज्यन्ते N in PS. *b* भृत्यान् आ° CRB; भाइश° HP, I in PS. *c* चूडामणिस् तथा पादे A in HP; पादेः [पा°] CRC, om. IS. *d* नूपुरो न च मूर्धनि HJ, HS, HH, HC; नूपुरं मूर्ध्नि धार्यते HK; नूपुरं (°रं IS) शिरसा कृतं HM, HC; स्वभावात् प्रतिबध्यते A in HP; पादाद् प्रतिबध्यते CRC, CRT, CPS; शोभते वै कदाचन GP; प्रभावान् इति बुध्यत CNG; प्रभुर्वा न हि ब° CRP; °वन् इति NB in PS; °वमेति PT (v. l.); °वाद् विनि° A in PS; °वाद् अपि PS; °वेनाऽपि C in PS; प्रभुनाऽपीति IS; बुध्यते [illegible] in PS.

3.11 CRP 3.11, CRB 3.11, CRBh I 3.11, CRBh II 3.12, CRC 3 12, GP 1.110,12. Also CPS 70.51.

कुसुमस्तबकस्यै(स्य ए)व द्वयी वृत्तिर् मनस्विनः ।
मूर्ध्नि वा सर्व-लोकस्य शीर्यते वन एव वा ॥ १२ ॥

वाजि-वारण-लोहानां काष्ठ-पाषाण-वाससाम् ।
नारी-पुरुष-तोयानाम् अन्तरं महद् अन्तरम् ॥ १३ ॥

---

*a* चूडमणि (°णिः GP, GPy) CRBh II, GP, GPy; ध्वनिर् GP; ध्वनि GPy. *b* षण्डा CRP; षण्डा चाखण्डमम्बरम् GP; मण्डलाखण्डमम्बरम् GPy. *c* °पालो GP, GPy; °पाल° CRC, CRBh II, CRP, CPS. *d* पादावसारणम् CRC, CPS; पादे प्रमादतः GP; पादः प्रमादजः GPy.

3.12 CRP 3.12, CRB 3.12, CRBh I 3.12, CRBh II 3.13, CRC 3.11, CRCa I 3.10, CRT 3.9, GP 1.110,13. Also CPS 59.26. Also quoted in HJ 1.142, HS 1.126, HM 1.131, HP 1.101, HN 1.102, HK 1.134, HH 26.17-8, HC 36.3-4, BhŚ 34, ŚP 264, (ascribed to BhŚ), SRBh 79.4, SV 201 (ascribed to Ravigupta), and 509, SRHt 126.2, SKM 7.2, SRH 102.2, SRK 48.9, JS 56.2, SkV 1221, RJ 1431, IS 1845, Subh 308, SA 24.46, ST 43.22, SHV f.71a, 87a, SM 1572, SSV 1544, JSV 168 2, SKG f.17a. Also found in ShD(T) 26.

*a* मालतीकुसुमस्य् एव FS in BhŚ; most of the texts have °स्येव; my change to °स्यैव. *b* द्वे वृत्ती तु (च HP, Pp in HS) H (but द्वे तु वृत्ते N in HP, HN); द्वे गती (वृत्ती GPy) तु म° GP, GPy; द्वे गती हि $CT_1$c.v $M_1$ in BhŚ; द्वे गती तु $JY_3$ $T_2$ $M_{3-5}$ in BhŚ; द्वे गती च $W_3$ $Y_3$ in BhŚ; द्वे गती तु (or तु) $X_1$ in BhŚ; द्वे गती स्तो $Y_1$ in BhŚ; द्वेधा वृत्तिर् $T_3$ in BhŚ; द्वे हि वृत्तिर् (°त्ती $M_2$) $G_1$ $M_2$ in BhŚ; द्वे गती च मन° (महात्मनः IS) IS; वृत्ति CRCa I; मान° CRBh I; मनस्विनो $X_1$ $Y_1$ in BhŚ. *c* स° वा मू° tr. HP, Pp in HS, सर्वेषां (सर्वस्य IS) मूर्ध्नि वा तिष्ठेद् H (with the exception of HP) मूर्धनि $W_{2,3}$ in BhŚ; °लोकानां GP, GPy $E_3$, $F_3$ in BhŚ. *d* विशीर्येत वने (वनेऽपि वा N in HP, Pet in HS, HN) स्वया GPy, HK, Pet in HS, N in HP, HN; शीर्यतः पतितो वने GP; विशीर्येत वनेऽपि वा HP; विशीर्येद् अथ वा वने H (with the exception of HK, HP, HN); विशीर्येद् अथ वा वने edd. P in HS, विशीर्यते IS; शीर्येत IS; शीर्यते $E_a$ $H_1$ in BhŚ; क्षीयते $E_a$ $H_3$ in BhŚ; जीर्यते $G_{1,2,5}$ in BhŚ; वनेऽप्य् अपि IS; °च मनोऽथ वा IS; वनेथ वा $J_2F_4W_2$ in BhŚ; वने यथा $W_{1,2,4}$ in BhŚ.

3.13 CRP 3.13, CRB 3.13, CRBh I 3.13, CRBh II 3.14, CRC 3.13, CRT 3.10, GP 1.110, 15 = Cv 8.8 where different readings are noted. Also CNG 57, CNI I 222, CNIU 18, CNT IV 246, CnT V 45, CPS 74 59. Also quoted in Padma-purāṇa Sṛṣṭikhaṇḍa 18.92, PT 1.36, PTem I 40, PP 1.328, PRE 1.41, HJ 2.38, HS 2.38, HM 2.40, HP 2.35, HN 2.35, HK 2.40, HH 46,5-6, HC 61.5-6, VCsr 26.4, Śts 172.11-2, Vet 3.7, MK 121 SRBh 163.474, IS 6029, Subh 207.

न सद्-अश्वाः कशाऽऽघातं न सिंहा घन-गर्जितम् ।
परैर् अङ्गुलि-निर्दिष्टं न सहन्ते मनस्विनः ॥ १४ ॥

सकृद् दुष्टं तु यो मित्रं पुनः संधातुम् इच्छति ।
स मृत्युम् उपगृह्णाति गर्भम् अश्वतरी यथा ॥ १५ ॥

उपकार-गृहीतेन शत्रुणा शत्रुम् उद्धरेत् ।
पाद-लग्नं कर-स्थेन कण्टकेने(न इ)व कण्टकम् ॥ १६ ॥

---

*a* °लौहानां CRT, GP, GPy. *b* तृणपा° CRB, CRP, CRBh I; °वाशितास् CRBh I.

Other readings have been recorded in Cv 8.8.

3.14 CRP 3.14, CRB 3.14, CRBh I 3.14, CRBh II 3.15, CRC 3.14, CRCa I 3.11, CRT 3.12, GP 1.110,17. Also CPS 60.27. Also quoted in SRBh 80.27, SV 2265.Cf. SV 2271.

*a* मदश्वः CRP, CRBh I, CRCa I, GP, GPy. *b* वा CRBh I; सिंहो CRC, CRCa I, CRT, CPS; सिंहो न गजग° GP, GPy. *c* पौरेर वा परनिर्दिष्टं GP, GPy; °लिनिर्दिष्ट (°दैर् CRT, BC in SV) CRBh I, CRT, BC in SV. *d* न सहन्तीमनिःस्वनम् GP, GPy.

3.15 CRP 3.15, CRB 3.15, CRBh I 3.15, CRBh II 3.16, CRC 3.15, CRCa I 3.12, CRT 3.15, GP 1.110,19=CN 17 where different readings are noted. Also CPS 62.33. Also quoted in PS 2.19, PN 1.17, PT 2.29, PTem 2.29, PP 2.27 and 4.13, Pts 2.32 and 4.14, PRE 2.19, HJ 2.147, HS 2.140, HM 2.148, HP 2.135, HN 2.134, HK 2.146, HH 65.11-2, HC 86.9-10, SRBh 161.345, SV 2757, SRHt 155.3 (ascribed to Kāmandaki), IS 6656. Also found in LN (P) 85, NKy (B) 110 second part, NM (T) 6.12. Cf. MBh 12,140,30 and 1.142, 81-2.

*a* रुष्ट CRB; दुष्ट CRBh II; दुष्टम् SV; य [तु.] GP; य मित्रं यः [तु...] CN; यो यो (scribe's error) CRBh II; यन् CRT. *c* अपि गृ° CRBh I; एव गृह्णीयात् GPy (GP as above). *d* स्यात् वरी य° CRBh I; अश्वात्सरी CRBh II; अश्वातरी CRP; अश्वात् वरी CRCa I.

Other readings have been recorded in CN 17.

3.16 CRP 3.16, CRB 3.16, CRBh I 3.16, CRC 3.16, CRCa I 3.13, CRT 3.17, GP 1.110,21=CN 20, CS 2.9 where different readings are noted. Also CnT V 13, CPS 369.50. Also quoted in SRBh 142.314, ŚP 1303, IS 1279. (Cf. PP 4.16, Pts 4.18, PtsK 4.19).

अपकारिषु मा पापं चिन्तयस्व महामते ।
स्वयम् एव हि नश्यन्ति कूल-जाता इव द्रुमाः ॥ १७ ॥

अनर्थोऽप्य(पि अ)र्थ-रूपेण तथाऽर्थोऽनर्थ-रूप-भाक् ।
उत्पद्यते . . विनाशाय तस्माद् उक्तं परीक्षयेत् ॥ १८ ॥

कार्यम् आलोचिताऽपायं मतिमद्भिर् निचेष्टितम् ।
न केवलं हि संपत्तौ विपत्ताव(त्तौ अ)पि शोभते ॥ १९ ॥

विविच्य स्वात्मनै(ना ए)वाऽऽदौ पश्चाच् च सह धीमता ।
कार्यं कुर्यान् न सिद्धिश् चेत् तत्र वाच्यो भवेद् विधिः ॥ २० ॥

---

*b* शत्रु मित्रंसम् CRBh I. *d* कण्ठलग्नप CRBh I, °वनैव CRC, CRP, CRT, GP, GPy

Other readings have been recorded in CN 20 and CS 2 9

3 17 CRP 3 17, CRB 3 17, CRBh I 3 17, CRBh II 3 17, CRC 3 18, CRCa I 3 14, CRT 3 18, GP 1 110,22 Also CNI I 129, CNG 59, CPS 60 28 Also quoted in PP 1 164, SV 3358, SRHt 193 67, IS 390

*a* अपकारपरे नित्य GP (only), शत्रोवा [मा पा°] CRT, माहा पाप CNI I (contra metrum), पापा GPy (only) *b* चि तयेन् न (°च त्व PP) कदाचन GP, GPy CRT, PP, चिन्तया कदाचन CNI I (contra metrum), कदाचन CNG, SRHt *c* विनश्यन्ति CRBh I, CRP प्रणश्यति (°न्ति CRCa I) CRBh II, CRCa I पतिष्यन्ति ,CRT, GP, GPy, CNG, CNI I, PP, SRHt *d* कुल° N in PP

3 18 CRP 3 18, CRB 3 18, CRBh I 3 18, CRBh II 3 18, CRC 3 19, CRT 3 19, GP 1 110,23 v 1 Also CPS 77 65.

*a* अनर्था या अर्थरूपान् च (°पेण GPy) GP, GPy *b* अर्थाश् चाऽनर्थरूपिण GP, GPy, °रूपभाक् CRBh I *c* भवन्ति ते वि° GP, GPy *d* दैवायत्तस्य वै सद GP, दैवात् तत् तस्य रक्षत GPy, शुक्त CRP, CRBh II, परिक्षयत् CRBh I

3.19 CRP 3 19, CRB 3 19, CRBh I 3 19, CRBh II 3 19, CRC 3 20, CRT 3 20, GP 1.110,24 v 1 Also CPS 77 64 Also quoted in SV 2717, SRHt 104 6

*a* आलाचितऽपाय CRBh II. *b* भिविवचितम् (°दितम् CRBh II) CRBh I, CRP, SV, SRHt, CRBh II

3 20 CRP 3 20, CRB 3 20, CRBh I 3 20, CRBh II 3 20, CRC 3 21.

धन-धान्य-प्रयोगेषु विद्या-संग्रहणेषु च ।
आहार-व्यवहारेषु त्यक्त-लज्जः सदा भवेत् ॥ २१ ॥

पञ्च यत्र न विद्यन्ते न कुर्यात् तत्र संस्थितिम् ।
लोक-यात्रा भयं लज्जा दाक्षिण्यं धर्म-शीलता ॥ २२ ॥

---

*a* निरिच च CRBh I; °नैव CRBh II. *b* पश्चा CRBh I; च स° tr. CRBh I; पश्चात् सह च CRP; श्रीमताम् CRP. *c* कुर्या CRBh I, CRP. *d* क्रिये CRBh I; विधिर् भवेत् CRC.

3.21 CRP 3.21, CRB 3.21, CRBh I 3.21, CRBh II 3.21, CRC 3.22, CRCa I 3.14 *bis*, CRT 3.21, GP 1.110,25 v. I. (Also quoted in Smṛtitattva of Raghunandana I 346. 21-2)=CV 7.2, Cv 5.12, CS 1.9, CN 33 where different readings are noted. Also CnT II 7.12, CnT III 5.12, CnT VI 86, CPS 182.19. Also quoted in IS 3042, VP 9.72. Also found in LN (P) 160, NKy (B) 205 v. 1.

*a* धनप्रयोगकार्येषु (°र्ये च GPy) GP, GPy; °प्रयोगेषु CRBh II. *b* तथा विद्यासंग्रहेषु च CN, GP, GPy. *c* आहारे व्यवहारे च (°रेषु CS) CV, Cv, CN, GP, GPy, CS; आहारे° CRBh I; आहारविनिहा° CRCa I. *d* त्यक्तलज्जा CRBh II; °लज्ज CRBh I, CRCa II; सुखी [स°] CV, Cv; सदैव हि GP (GPy as above).

Other readings have been recorded in CV 7.2, Cv 5.12, CS 1.9 and CN 33.

3.22 CRP 3.22, CRB 3.22, CRBh I 3.22, CRBh II 3.22, CRC 3.23 *cd*-24 *ab*; CRCa I 3.15 *ab* and 3.16 *ab*, CRT 3.22 *cd/ab*, GP 1.110.26 *cd*-27 *ab*=CV 1.10 *cd/ab*, Cv 1.11, CS 3.56 *cd/ab* where different readings are noted. Also CNP I 95, CNPh 26, CNG 293, CNT IV 98, CNM 95, CNMN 70, CnI VI 12, CPS 20.55. Also quoted in HJ 1.111, HM 1.104, HK 1.106, HH 22.15-6, HC 30.10-1, SRBh 163.453, IS 3862, SRHt 111.5, Subh 124, NT 104 (cf. CV 1.9, Cv 1.10, Vi 71.66). Also see SRN (T) 333.

*a* यस्मिन् [न°] NT. *b* तत्र वासं न कारयेत् CRC; तत्र कुर्यात् न CRBh II; तेन संगमम् NT; दिवसं CRBh I, CRP; संगतिम् CRT, Cv, CS. *d* दाक्षिण्य CRBh I; त्यागशीलता CV, Cv, CS, CRT; दानशीलता GP, GPy.

Other readings have been recorded in CV 1.10, Cv 1.11 and CS 3.56.

तत्र देशे न वस्तव्यं यत्र नाऽस्ति चतुष्टयम् ।
ऋण-प्रदाता वैद्यश् च श्रोत्रियः स-जला नदी ॥ २३ ॥

उपकार-शतेनाऽपि गृह्यते केन दुर्जनः ।
साधुः संमान-मात्रेण मनत्ये(ति ए)नाऽऽत्म-विक्रयी ॥ २४ ॥

सुखाऽर्थी च त्यजेद् विद्या विद्याऽर्थी च त्यजेत् सुखम् ।
न विद्या-सुखयोः सन्धिस् तेजस्-तिमिरयोर् इव ॥ २५ ॥

भूतानां प्राणिनः श्रेष्ठाः प्राणिनां बुद्धि-जीविनः ।
बुद्धिमत्सु नराः श्रेष्ठा नरेषु ब्राह्मणाः स्मृताः ॥ २६ ॥

---

3 23 CRP 3 23, CRB 3 24, CRBh I 3 23, CRBh II 3.24, CRC 3 24 *cd*-3 25 *ab*, CRCa I 3 16 *cd* and 3 15 *cd*

*a* न त° दे° व° tr CRB *c* °प्रदा (ता missing) CRBh II, वैद्यस् तु CRC *d* मित्रिय CRBh II, सुजला CRCa I

3 24 CRP 3 25 CRB 3 26 CRBh I 3 25, CRBh II 3 25, CRC 3 17 Also CPS 52 7 (*cf* CL 4 10)

*a* शतैरेव CRC CPS *b* दुर्जनः कोऽपि (केन CPS) गृह्यते CRC, CPS *c* साधु CRBh I, CRBh II *d* भावयता CRBh I, CRP, भवेद् एवाऽऽत्मविक्रयी CRBh II

3 25 CRP 3 29, CRB 3 27, CRBh I 3 29 CRBh II 3 29, CRC 3 26 (cf CV 10 3, CL 7 8, CPS 267 10 MBh 5 39, 6 *cd* 7 *ab*, SRBh 216, IS 7088 Subh 260)

*a* चेद् CRB, CV, वा CL *b* चेद् CRB, CV, वा CL, त्य° सु° tr. CRBh I *c* सुखार्थिनः कुतो विद्या CV, CL °सुखा CRBh I *d* कुतो विद्यार्थिनः सुखम् CV, CL.

Compare other readings recorded in CV 10 3 and CL 7 8

3 26 CRP 3 26 CRB 3.28, CRBh I 3 26, CRBh II 3 26, CRC 3 27, CRCa 3 18. Also CPS 63 36 Also quoted in Mn 1 96 SMPh 70 6

*a* भूतानां CRBh II, श्रेष्ठा CRBh I CRCa I *c* नरा CRBh I, CRBh II, CRCa I श्रेष्ठा CRCa, CPS *d* ब्राह्मणा CRP, CRBh I, CRBh II, CRCa I स्मृता CRBh I वरा CRBh II CRCa I

This maxim was probaly incorporated in the CR version from Mn (Cf CStMn. No 1).

ब्राह्मणेषु च विद्वांसो विद्वत्सु कृत-बुद्धयः ।
कृत-बुद्धिषु कर्तारः कर्तृषु ब्रह्म-वादिनः ॥ २७ ॥

छायाम् अन्यस्य कुर्वन्ति तिष्ठन्ति स्वयम् आतपे ।
फलन्ति च परस्याऽर्थे सत्-पथ-स्था इव द्रुमाः ॥ २८ ॥

दुर्जनः परिहर्तव्यो विद्ययाऽलंकृतोऽपि सन् ।
मणिना भूषितः सर्पः किम् असौ न भयं-करः ॥ २९ ॥

---

3.27 CRP 3.27, CRB 3.29, CRBh I 3.27, CRBh II 3.27, CRC 3.28, CRCa I 3.19. Also CPS 63.27.

*a* षु [च] CRB, CRBh II. *d* ब्रह्मचारिणो CRBh I; ब्रह्मवेदिनः CRC, CPS.

3.28 CRP 3.28, CRB 3.30, CRBh I 3.28, CRBh II 3.28, CRC 3.29, CRCa I 3.20. Also CNI I 345, CPS 64.39. Also quoted in Vet 15 16, VCtr 2.4, Any 109.22, SLV 1229, SRBh 236.4, IS 2307.

*a* छायाम् अन्यस्य CRBh I; अन्ये तिष्ठन्ति छायायां N in VC. *b* ति° स्व° tr. VC; चातपे VC. *c* फलन्त्यपि परार्थेषु SRBh; परार्थेषु (°र्थे च Q in VC, °र्थे न VJE in VC; °र्थाय CNI I) VC, CNI I; फलित्वाऽर्थे CRBh I. *d* नात्महेतोर् (स्वयम् दृश्यं J in VC; न स्वार्थे CNI I) महाद्रुमाः VC, CNI I; द्रुमाः (तरवः SRBh) सत्पुरुषा इव (नरा Q in VC) SRBh, QE in VC; महा° [द्रु°] CRBh II; द्रुमौ CRBh I.

3.29 CRP 3.30, CRB 3.31, CRBh I 3.20, CRBh II 3.30, CRCa I 3.21, CRT 5.16, GP I.112,15=CS 3.35, CN 23 where different readings are noted. Also CnT II 15.12, CnT III 7.84, CnT V 126, CPS 356.15. Also HJ 1.91, HS 1.75, HM 1.88, HK 1.90, HH 20.56, HC 27.14-5, BhŚ 27 (in IS ascribed also to RT 1.324 but could not be found there), SRBh 54.5, ŚP 354, SRK 22 6 (ascribed to Sphuṭaśloka), SV 355, SRHt 41.28 (ascribed to Sarasvatīkaṇṭhābharaṇa) IS 2850, SuM 10.7, Sskr 55, Subh 89 and 306, TP 415. (cf. CS 3 32, CN 24, Cv 2.8). Also see Vyās (C) 34.

*a* परित्यक्तव्यो CRB. *b* सार्थेयस्य [वि°] CS; यदि [अपि सन्] GPy (GP as above), CRT. *c* मणिना CRBh I; भूषितः सर्पो CRCa I; भूषितो CRT. *d* भयम् किम् न भ° CRCa, SV.

Other readings have been recorded in CN 23 and CS 3.35.

दुर्जनैः सह सङ्गेन सज्जनोऽपि विनश्यति ।
जलं प्रसन्नम् अप्या(पि आ)हुः पङ्कः कलुषतां नयेत् ॥ ३० ॥

प्रियं-वदेऽपि विश्वासो न कार्यो दुर्जने क्वचित् ।
धत्तेऽमृतं स जिह्वाग्रे हृदि हालाहलं विषम् ॥ ३१ ॥

दुर्जनस्य मुखे प्रीतिर् वाणी चन्दन-शीतला ।
हृदये तस्य दुर्बुद्धेः कुलिशाद् अपि कर्कशम् ॥ ३२ ॥

सफलत्वं सपक्षत्वम् आर्जवं गुण-संगतिम् ।
दर्शयन्तः प्रविशन्तः खला घ्नन्ति शरा इव ॥ ३३ ॥

---

3.30 CRP 3.31, CRB 3 32 v 1, CRBh I 3.31, CRBh II 3.31, CRC 3 30, CRCa I 3 22 Also CSBD 200, CSJ 3 7, CNG 282, CPS 58.8. Also quoted in IS 7546. Also see NM (T) 6 21.

*a* दुर्जनस्यास्तुसं° CRBh I, CRBh II, CRP, CRCa I, दुर्जनै CSJ, सग्यन CSJ. *b* सुजनो CSBD, CSJ. *c* प्रसन्न (°न्न IS) अलस् स्त्य आहु CSBD, CSJ, most of the texts have आशु, my change to आहु *d* कद्मै (कद° IS; कर्द° IS, °पि° CSJ; °पी° CSBD) कलुषयते CNG, CSBD, CSJ, IS, पक कलुषतां CRBh I, CRBh II, CRP, पङ्कः (°ङ्क CPS) कर्दमता CRC, CPS.

3.31 CRP 3.32, CRB 3 33, CRBh I 3 32, CRBh II 3 32, CRC 3.31, CRCa I 3 23 Also CPS 53 9

*a* °वेदपि CRBh I *b* दुर्जनो CRBh I. *c* यत्ते CRBh II

3 32 CRP 3 33, CRB 3 34, CRBh I 3 33, CRBh II 3 33, CRC 3 32, CRCa I 3 24 Also CPS 53 10

*b* वाचि CRC, CPS, °शीतता CRC, CPS *c* हृदय CRBh I, CRBh II, CRP, दुर्बुद्धि CRC, CPS. *d* कुलिशान्द् CRBh I, कर्कशा CRC, CPS.

3.33 CRP 3 34, CRB 3 35, CRBh I 3 34, CRBh II 3 35, CRC 3 34, CRCa I 3.25 Also CPS 61.31.

*a* सफलत्व CRBh I, सप° CRCa I *b* आजव CRBh II *cd* द° प्र° ख° घ्न° श° इ° tr. CRC, CRBh I *c* प्रवदन्तः CRBh I. *d* खला CRCa I.

दूरात् संकुचित-ग्रीवो मन्दं मन्दं प्रभाषते ।
शनैर् उद्धरते पादम् एतद् धूर्तस्य लक्षणम् ॥ ३४ ॥

आदौ तु रमणीयानि मध्ये तु विरसानि च ।
अन्ते वैरायमाणानि संगतानि खलैः सह ॥ ३५ ॥

लब्धे ज्ञाने गुरुं द्वेष्टि मखे पूर्णे तु ऋत्विजम् ।
पुत्रे जाते प्रियां द्वेष्टि कृत-कार्यो हि दुर्जनः ॥ ३६ ॥

तनुर् उपकारः साधुषु
विकसति परम् अप्सु तैल-बिन्दुर् इव ।
अधमेषु तु बाधते महान् अपि
संकुचति यथा घृतं तुहिने ॥ ३७ ॥

---

3.34 CRP. 3.35, CRB 3.36, CRBh I 3.35, CRBh II 3.36, CRC 3.35, CRCa I 3.26. Also CPS 62.32.

*b* च म° CRB; प्रभाषते CRCa I. *c* पादम् CRBh II. *d* उतत् CPS; धूर्ते CRBh II (scribe's error).

3.35 CRP 3.36, CRB 3.38, CRBh I 3.36, CRBh II 3.37, CRC 3.36, CRCa I 3.28, (cf. CR "D").

*a* आमुखं र° CRCa I; स्तु CRB. *b* विरमानि CRB. *c* वैराणि CRBh I. *d* संगमानि CRBh II; खलै CRBh I.

3.36 CRP 3.38, CRB 3.40, CRBh I 3.38, CRBh II 3.41, CRC 3.37, CRCa I 3.29. Also CPS 54.11.

*a* लब्धं CRBh I; मध्ये [ल°] CRBh II. *b* कतो (कृतो CRBh I) द्विष्टि तथा द्विजात् (°त्विज CRBh I) CRP, CRBh I; कृते कार्ये च ऋत्विज CRBh II. *a* कृता विष्टे तु ऋणाद्विजम् CRCa I. *d* °कार्ये CRBh II; दुर्जना: (°न: CRC) CRBh II, CRC.

3.37 CRP 3.39, CRB 3.41, CRBh I 3.39, CRBh II 3.44, CRC 3.38, CRCa I 3.31. Also CPS 55.14.

*a* रूपकट CRBh II. *b* परसुतैलविदुखी CRBh I; जलेषु तै° CRBh II. *c* अधमेषु तु बधते महान् (महद् CRB; मदान् CRBh I) CRB, CRP, CRBh I, CRBh II. *d* संकुचिति (°तं CRB) CRBh II, CRP, CRB; य° घ tr. CRB; तुहीनै: CRBh II. Āryā metre.

सह वसताम् अप्य(पि अ)सतां
जल-रुह-जलवद् भवत्य(ति अ)संश्लेषः ।
दूरेऽपि सतां वसतां
भवति हि कुमुदे(द-इ)न्दुवत् प्रीतिः ॥ ३८ ॥

कदर्थितस्याऽपि महाऽऽशयस्य
न शक्यते सर्व-गुणान् प्रमार्ष्टुम् ।
अधो-मुखस्याऽपि कृतस्य वह्नेर्
नाऽधः शिखा यान्ति कदाचिद् एव ॥ ३९ ॥

---

3 38 CRP 3 40, CRB 3 42 CRBh I 3 40, CRBh II 3 45, CRC 3 39, CRCa I 3 32 Also CPS 61 29 Also quoted in SRBh 58 175, SV 399

*b* जलरुहवद् भवत्य् CRBh I *c* सताम् अपि व CRBh II (contra metrum) *d* प्रीº कुº भº tr (हि om ) SRBh, SV (contra metrum )
Arya metre

3 39 CRP 3 41, CRB 3.43, CRBh I 3 41 ( *cd* missing ) CRC 3 40, CRT 3 11, GP 1 110,16 ( Almost identical with PS 1 32, PN 2 24, PT 1 28, PTem 1 31 PRE 1 31, HJ 2 67, HS 2 66, HM 2 67, HP 2 61, HN 2 60 HK 2 68, HH 50 9-10, HC 66 1-2 ) Also found in BhS 226, SRBh 77 8, SP 227, SV 316 and 528, SRK 51 4 SRHt 126 7 IS 1519

*a* हि दैन्यवृत्तर् [मº] CRC, CRT, CPS हि (च SRHt ) दैववृत्तेर् ( धैº GPy, BhŚ SRK ) GP, GPy, SRBh SP SV 528 ( only ) SRK *b* धर्यगुण [सº] BhS, SRBh, SP SRK, धैर्यगुण SRHt सर्वगुण SV 316, सत्त्वगुण SV 528, ºगुणप्रमाथ GP, GPy, प्रमाष्य CRBh I प्रमार्ष्टुम् CRC CRP CRT *c* अध खलना-ऽपि GP, GPy, तनूनपातो SRK वह्ने CPS *d* यान्ति CRC CRT, CPS, GP, GPy, BhŚ, SRK, SRHt.

Other readings have been recorded in CStH No 125
Ārya metre

शत्रोर् अपत्यानि वशं गतानि
नो(न उ)पेक्षणीयानि बुधैर् मनुष्यैः ।
तान्ये(नि ए)व कालेन विपत्-कराणि
यताऽसि-पत्राद् अपि दारुणानि ॥ ४० ॥

मधु-घट-शत-सिक्तो स्वादुता नाऽस्ति निम्बे
घृत-पल-शत-होमैः शीतलत्वं न वह्नेः ।
हल-शत-परिकृष्टेऽप्यू(पि ऊ)षरे नाऽस्ति सस्यं
त्यजति न निज-भावं दुर्जनः सेवितोऽपि ॥ ४१ ॥

अणुर् अपि मणिः प्राण-त्राण-क्षमो विष-भक्षिणां
शिशुर् अपि रुषा सिंही-सूनुः समाह्वयते गजान् ।
तनुर् अपि तरुस्कन्धो(न्ध-उ)द्भूतो दहत्य(ति अ)नलो वनं
प्रकृति-महतां जात्व(तु अ)न्यथा न मूर्तिम् अपेक्षते ॥ ४२ ॥

---

3.40 CRB 3.44, CRC 3.41, CRCa I 3.33, CRT 3.16, GP 1.110,20. Also CPS 74.58.

*a* प्रियंवदानि CRT, GP, GPy. *b* नापेक्षितव्यानि GP, GPy; नोऽपेक्षितव्याणि CRT. *c* तान्येषु CRT, GPy (only); कालेषु CRT, GP, GPy. *d* विषस्य पात्राण्यपि (पात्राणि हि GP) दा° CRT, GPy, GP.

Upajati metre (Indravajra and Upendravajrā)

3.41 CRP 3.42, CRB 3.47, CRBh I 41-42 (beginning missing), CRBh II 3.46, CRC 3.44, CRCa I 3.34. Also CPS 52.6.

*a* °शतसक्के CRBh I; साधुता CRBh II, CRCa I; निचिवे [ ना° ] CRBh I; निम्ब (°म्बो CRB) CRP, CRB. *b* दावसोभैः CRBh II; °शत्व वहे CRBh I. *c* °परिकृष्टे पूषरे CRBh I; आपरे CRC. *d* च कुमार्व CRC.

Malini metre.

3.42 CRP 3.43, CRB 3.48, CRBh I 3.43, CRC 3.45-6, CRCa I 3 35. Also CPS 69.49. Also quoted in SRBh 51.227, SV 325.

*a* °भक्षणाद CRC, CPS. *c* वने CRCa I. *d* प्रकृतिर् CRC; महिमा याति व्यक्ति CPS; जात्वतेजो CRBh I; त्वत्यन्तेजो CRP; चाऽन्यथ्योत CRCa I.

Harinī metre.

